# संस्कृत के बहुआयामी पक्ष

## (Multidimensional Aspects of Sanskrit)


सम्पादक

प्रो. गिरिश चन्द्र पंत

आचार्य एवं पूर्वअध्यक्ष संस्कृत विभाग

सह सम्पादक

डॉ. धनञ्जय मणि त्रिपाठी

सहायक आचार्य संस्कृत विभाग

जामिया मिल्लिया इस्लामिया

(केन्द्रीय विश्वविधालय)

नई दिल्ली


प्रकाशक

**इन्दु प्रकाशन**

दिल्ली-भोपाल

सम्पादक : प्रो. गिरिश चन्द पंत
सह सम्पादक : डॉ. धनञ्जय मणि त्रिपाठी
ISBN : 9788186863398

प्रथम संस्करण : 2023

मूल्य : 3500.00

प्रकाशन : इन्दु प्रकाशन,
आकर्षण भवन, 23 अंसारी रोड़ दरियागंज नई दिल्ली-110002
फोन : 09818884003
e-mail : indu_prakashan17@yahoo.in

शाखा कार्यालय : दुकान नं. 26, सुभाष मार्किट बस स्टॉप नं. 6
शिवाजी नगर भोपाल-462016
9968536565

शब्द-संयोजन : श्रीओ३म् कम्प्यूटर्स, दिल्ली

मुद्रक : भारती प्रिंटर्स, नवीन शाहदरा, दिल्ली-110032

# अनुक्रमणिका

# जातकमालायां श्लेषालङ्कारस्य विवेचनम्

ज्योतिकला द्विवेदी

साहित्यशास्त्रस्य संस्कृतभाषोपरि आधिपत्यं दृश्यते। आदिकविवाल्मीकितः आधुनिकयुगपर्यन्तं संस्कृतसाहित्यस्याधिक्यं वर्तते। ये कवयः कमपि काव्यं रचयन्ति, ते सर्वे साहित्यशास्त्रमाधारीकृत्यैव स्वरचनां प्रस्तुवन्ति।

संस्कृतसाहित्यजगति महती काव्यपरम्परा विद्यते। तासु काव्यपरम्परासु रसः अलङ्कारः ध्वनिः गुणभूतव्यङ्ग्यः इत्येतेषां परम्परा प्रमुखा आसन्। बौद्धकवेरार्यशूरस्य रचनासु एतेषां साहित्यिकसन्दर्भानां बहुलतया उद्घोषोऽभवत्।

जातकमालायाः रचनावसरेऽपि कवेरार्यशूरस्य मनसि भगवतः बुद्धस्य जातककथाः आलोच्य रचयितुं धारणा विद्यते स्म। अत्र चतुस्त्रिंशज्जातका विद्यन्ते।[1] परन्तु जातकानां रचनावसरे कविरयं साहित्यतत्त्वान् आलोच्यैव ग्रन्थमिमं रचितवान्।

जातकमालायां ये चतुस्त्रिंशज्जातकाः दृश्यन्ते, ते सर्वे साहित्यिकाधारभूताः। कुत्र रसस्य प्रादुर्भावः कुत्रालङ्कारस्य प्रभावः सर्वोपरि सर्वतः दृश्यते। रहस्य मुख्यतया आविर्भावाः किमर्थं जातकः कथायां भवति, बोधिसत्वस्य भगवतः बुद्धस्य पूर्वजन्मकथा अत्र त्याग-निष्ठा-स्नेह-प्रेम-दयाप्रभृतिभावानां मार्मिकं परिशीलनमत्र दृश्यते।

श्लेषः–श्लेषालङ्कार भेदाः प्रमुखतया जातकमालायां दृश्यते न वा इत्यन्वेषणीयम्। श्लेषालङ्कारस्य लक्षणं यथा–

**श्लिष्टै पदैरनेकार्थाऽभिधानं श्लेष इष्यते।।**[2]

अर्थात् श्लिष्टैः पदैः नाम एक एव पदे अनेकार्थाभिधाने श्लेषालङ्कारो भवति। अपि चश्लिष्टैः...।[3]

**वर्णपत्ययलिङ्गानां प्रकृत्योः पदयोः अपि।**
**श्लेषादिभक्तिवचनभाषाणां अष्टधा च सः।।**[4]

अर्थात् वर्ण-प्रत्यय-लिङ्ग-प्रकृति-पद-विभक्ति-वचन-भाषा इति अष्टधा भेदमित्रः श्लेषो भवति। यथा–

**स्थाने भक्तिवशेन गच्छति जनस्त्वत्कीर्तिवाचालताम्।**
**स्थाने श्रीः परिभूय पङ्कजवनं त्वत्संश्रयश्लाघिनी।।**
**व्यक्तं शक्रसनाथतामपि गता त्वदीये गुप्तामिमाम्।**
**द्यौ पश्यत्युदीप्तस्पृहा वसुमतीं नो चेदहो व श्रयते।।**[5]

किं बहुना? श्लोकोऽयं श्लेषालङ्कारणे परिपूर्णाऽस्ति। अर्थात् जनः भक्तिवेशेन त्वत्कीर्तिः वाचालतां गच्छति। अर्थात् भक्तिवेशन वशीभूतः जनः भवतः कीर्त्ति सर्वेषु क्षेत्रेषु सुदूरं प्रसारमकरोत्। 'जनस्त्वत्कीर्तिः वाचालतां गच्छति' इत्यस्य स्पष्टीकरणे अर्थः एतादृशं भवति। यथा–

भवान् दिग्विजयी, चक्रवर्ती, तथा प्रजापालक इति। द्वितीयपादे "स्थाने श्री: परिभूय पङ्कजवनं त्वत्संश्रयश्लाघिनी"। श्री पङ्कजवनं...।

अर्थात् लक्ष्मी: अपि पङ्कजवनं त्यक्त्वा भवता निकषा तिष्ठति। अपरेऽपि अर्थस्य एतादृशोऽपि अर्थ: आगच्छति, यद् भवान् श्रीसम्पन्ना: पृथिव्यां सर्वेषु राजसु भवान् अपि समग्रश्रीसम्पन्न: लक्ष्मीसम्पन्नश्च।

त्रिभुवने भवत्सदृशं जन: देवो नास्त्येव। हूस्यं लक्ष्मी: त्वामाश्रित्य पङ्कजवनं परित्यज्यं तिष्ठति। सत्यमेतद् यद् आर्यशूर: यथैव कविरासीत्, तथैव तस्य रचनेयं सर्वान् जनान् आनन्दयति। तत्र नास्ति काश्चिद् विप्रतिपत्ति:, सन्देहो वा। अपि च–

**व्यक्तं शक्रसनाथतामपि गता त्वद्वीये गुप्तामिमाम्।**
**द्यौ पश्यत्युदीप्तस्पृहा वसुमतीं नो चेदहो वञ्चयते॥**[6]

अर्थात् इन्द्रतुल्य: स्वामी प्राप्यामि (शक्रसनाथं) दिव्यभूमिं (स्वर्ग) यदि भवत: वीर्यात् स्थिता इयं वसुमति ईर्ष्यावशात् न पश्यति तर्हि अत्र सा अभागिनी नूनमेव वञ्चिता।

अर्थस्य स्पष्टीकरणार्थमेतदपि कथनं युक्तं समीचीनम्, यत्–

हे राजन! श्रीसम्पन्ना, भक्तिसम्पन्ना स्वर्गे मर्त्ये पाताले त्रिलोके भवत: कीर्तिराशि: विच्छुरिता। भवत्सदृश: राजा अत्र त्रिलोके नास्त्येव। अत: भवान् महान् भूत्वा राज्यमिदं परिपालयति।

अत: त्रिलोकेऽस्मिन् केचन पदा: श्लेषालङ्कारस्य दर्शनं कारयन्ति। यथा–'जनत्वत्कीर्ति:, वाचालता' 'पङ्कजवनम्' 'शक्रसनाथता' 'त्वदावीर्यगुप्तामिमाम' 'द्यौ: वञ्चयते' इत्यादिपदानां अनेकार्थाभिधाने अत्र श्लेषालङ्कारतां प्रमाणयति। अपि चापर: एक: श्लोक:–

**निर्भिन्दन्निव न: श्रुति: प्रतिभयश्चेतांसि मथ्नन्निव।**
**क्रुद्धस्येव सरित्पतेर्ध्वनिरयं दूरादपि श्रूयते॥**
**भीमे श्वभ्र इवार्णवस्य नियतत्येतत्समग्रं जलम्।**
**तत्कोऽसावुधि: किमत्र चापरं कृत्यं भवान् मन्यते॥**[7]

श्लोकोऽयं सुपारगजातकत: आगच्छति। अत्र बोधिसत्वस्य नौसारथि अवस्थायां वर्णनं दृश्यते। प्रकृते: स्वभावत: स: समग्रशास्त्रे प्रवीणोऽभवदिति देवाज्ञा आसीत्। महात्मायं ग्रहाणां नक्षत्राणां च गतिं जानाति स्म। नक्षत्राणां गतिज्ञानहेतो: स: सुकाल:, तथा दु:कालं सम्यक्तया ज्ञातवान्। मत्स्यस्य, जलस्य वर्ण भूमे: प्रकारं तथा पक्षीणां च कृतिं जानाति स्म। उक्त चार्यशूरेण–

बोधिसत्वभूता: किल महासत्त्व:, परमनिपुण: मतिनौसारथिर्बभूव। धर्मता ह्येषा बोधिसत्वानां प्रकृतिमेघावित्वाद्यदुता यं यं शास्त्रातिशयं जिज्ञासन्ते, कलाविशेषं वा तस्मिन्नधिकतरा: भवन्ति मेधाविनो जगत:। अथ स महात्मां विदितज्योतिर्गतित्त्वादिगभागे त्वसंमूढमति: परिविदितनियतागन्तुकोत्पातिकानिमित्त: कालक्रमकुशलो मीनतो वर्णभौमप्रकारशकुनिपर्वतादिनि श्चहे सूपलक्षितसमुद्रदेश: स्मृतिमान् विजिततन्द्रीनिद्र: शीतोष्णवर्षादिपरिखेदसहिष्णुरप्रमादी धृतिमानाहरणापहरणकुशलत्वादीप्तिसतं देशं प्राप्य वणिजमासीत्। तस्य परमसिद्धयात्रत्वात् सुपारग इत्येव नाम बभूव। तदधुषितं च पत्तनं सुपारगमित्येवाख्यातमासीत्, तस्मात् सुपारगमिति, ज्ञायते। सोऽपि मङ्गल समतत्त्वाद् बुद्धत्वेऽपि संयात्रिकैर्यात्रासिद्धिकामैर्वहन मभ्यर्थनसत्कारपुर: समारोप्यते। स्म। अथ कदाचिदभरूकमिति।

**अत्रास्मिन् गंद्याशे श्लेषलङ्कारस्य परिचयं,**

**यथा-श्रुतिः प्रतिभयश्चेतांसि मथ्वन्निव।**[8]

अर्थः—अस्माकं श्रुतिः निभिन्दन्निव मथ्नन् इव प्रतिभयश्चेतांसि।

**क्रुस्यैव सरित्पतेध्वनिरयं दुरादपि श्रूयते।**[9]

अर्थात् अस्माकं कर्णगह्वरं तथा हृदयप्रदेशमस्य समुद्रस्य गर्जनं श्रूयते, अपरं च—

**भीमे श्वम इवार्णवस्य।**[10]

**निपातत्येत्समग्रं जलम्।**

समुद्रस्य जलमिदं महागर्ते इव प्रतीतमस्ति इत्येव प्रतिज्ञायते।

तत्कोऽसावदधिः किमव च परं कृत्यं भवान् मन्यते।[11] अर्थात् कृपया भवान् वदतु यदयं समुद्रः कः तथा अत्रभवामनुसारं किं कर्तव्यमुचितमिति। पद्येऽस्मिन् सम्पूर्णोऽर्थः एतद् भवति यदस्माकं कर्णगह्वरं भेदयित्वा हृदयं विदारयित्वा समुद्रस्य गर्जनं दुरादेव श्रूयते। समुद्रस्य जलमिदं महागर्ते पततीति अनुमीयते।

कृपया भवान् आदिशतु यत् अयं समुद्रः कः तथा भवतः विज्ञानानुसारमस्कामं किं कर्त्तव्यम्। किं तावत् परमं कर्तव्यं च भवेत। पद्येऽस्मिन् केचन पदाः स्वस्मादर्थाद् भिन्नमपरमर्थ विज्ञापयति। अतोऽत्र श्लेषालङ्कार इति प्रमाणितं भवति। ते पदाः, यथा—

'सरित्पतेर्ध्वनिरयं' 'निपतत्येतत्समुद्रं' 'तत्कोऽसावुदधिः' इत्यादि। इदानीमुपमालङ्कारो व्याख्यायते।[12]

साम्यं वाच्यवैधर्म्यं वाक्यैक्ये उपमा द्वयोः।। एकस्मिन् वाक्ये 'उपमानम्' तथा 'उपमेयम्' इति पदार्थद्वयस्य वैधर्म्यरहितं वाच्यसादृश्यमुपमा इति कथ्यते।

**सा पूर्णा यदि सामान्यधर्मः औपम्यवाचि च।**

**उपमेयं चोपमानं भवेद् वाच्यम् इयं पुनः।।**[13]

साधारणधर्म, उपमावाचकः उपमेयः, उपमानं च, एते सर्वे वाच्यं भवेत्, अर्थाद् व्यङ्ग्यं लक्ष्यं वा न भवेत् चेत्, तदा पूर्णोपमा अलङ्कारः। उपमानस्योपमेयस्य तुल्यतायाः कारण रूप गुणं तथा क्रिया तथा मनोहरत्वस्य सामान्यधर्मः इति कथ्यते।

इव यथा, तुल्य समादि उपमा वाचक शब्दाः कथ्यन्ते साम्यस्थानुयोगी तथा उपमायाः योग्यपदार्थस्य मुखादयः 'उपमेयः' तथा साम्यस्य प्रतियोगी उपमानं कथ्यते। इयं पुनः—

**श्रौती यथेव वा शब्दा इवार्थो वा वतिर्यदि।**

**आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः।।**

यथेववादयः शब्दाः उपमानानन्तरं प्रयुक्तं तुल्यादिपदसाधारणोऽपि श्रुतिमात्रेणोपमानोपमेपगतसादृश लक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रोती उपमा।

एवं तत्र 'तस्येव' इत्यनेन इवार्थविहितस्य वतेः उपादानं तुल्यादयस्तु कमलेन तुल्यं मुखम् इत्यादि उपमानमेव 'कमलं मुखं च तुल्यम्' इत्यत्र उपमेयोपमानमुभयत्रापि विश्राममायान्ति इत्यर्थो अनुसन्धानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी। एवं तेन तुल्यमित्यादि वतेः उपादानम्। 'द्वे तद्धिते समासेऽवाक्ये'[14] पूर्वोक्तो श्रौती आर्थी द्वयमपि तद्वितगा, समासग

वाक्यगा त्रय एव भेदाः पुनः त्रिधा भवन्ति। इदानीमुपमा व्याख्यायते।

**कुशमाली समुद्रोऽमत्यङ्कु इव द्विपः।**
**प्रसह्यासह्यत्यसलिलो हरन् हरति नो रतिम्॥15**

अपि च–

**निभिन्दन्निव न श्रुतिः प्रतिभय श्चेतांसि मथ्नन्निव।**
**क्रुद्धस्येव सरित्पतेर्ध्वनिरयं इरादपि श्रूयते॥**
**भीमे स्वभ्र इवार्णस्य निपत्येतत्समग्रं जलम्।**
**तत्कोऽसाबुदधिः किमत्र चापरं कृत्य भवान् मन्यते॥[16]**

अपि च–

**अहेतुवादीदी विरूक्षवाशितं लवात्तत्र विशेषलक्षणम्।**
**अतो न तानर्हति सोवतुं बुद्ध श्चरेत्तदर्थ पराक्रमे सति॥[17]**

अपि च–

**सङ्क्षेपण दयामतः स्थिरया पश्यन्ति धर्म बुधाः।**
**को न नामास्ति गुणः स साधुदयितो यो नानुपातोदयाम्॥**
**तस्मात्पुत्र इवात्मनीव च दयां नीत्सा प्रकर्ष जने।**
**सद्वृत्तेन हरन् मनांसि जगतां राजत्वमुद्भावय॥[18]**

अपि च–

**जित्वा दृप्तौ शात्रवमुख्याविव संख्ये,**
**रागद्वेषौ चिन्तसमादानबलेन ब्राह्मम्।**
**लोकं येऽभिगता भूमय तेषां,**
**दैवाणामन्यतमं मां त्वमवेहि॥[19]**

ये श्लोका अत्र प्रस्तुता, तत्र सर्वस्मिन् भागे उपमालङ्कारस्याधिक्यमवलोक्यते। उपमालङ्कारप्रसङ्गे मयोदाहतः यः प्रथमः श्लोकः, यथा कुशमाली...नोचितम्।

श्लोकस्यास्यार्थः एतादृशो भवति, यथा–अयं कुशमाली नाम समुद्रः अल्पाङ्कुशः गज इव स्वस्य प्रखण्डजलवेगेन अस्मान् वाहयति, अस्माकं समग्रमानदमपहरति। श्लोकेऽस्मिन् समुद्रेण साकं गजस्य तुलना उपमालङ्कारस्य साधारणधर्मो भवति 'गजे अल्पाङ्कुशता' तथा समुद्रे वाहयन क्षमता। अत्र समुद्रस्य तुलनां कविः आर्यशूरः अत्यन्तं प्रभावपूर्णेन गजेन कृतवान्। अतोऽत्रोपमालङ्कारः।

उपमालङ्कए द्वितीये श्लोके सुपारगजातके निर्भिन्द...भवान्मन्यते। उपमालङ्कारः मिलति। अस्य श्लोकस्यार्थो भवति यदस्माकं कर्णगह्वरं विदारयन् अस्माकं हृदयं विदिर्णयन् सागरस्येदं भयङ्करं गर्जनं दूरादेव श्रूयते। समुद्रस्य समग्रं जलप्रदेशं महागर्ते। इति प्रतीयते।

भवान् कृपया कथयतु यदयं समुद्रः कः तथा तस्य कृते अस्माकं किं कर्तव्यम्। श्लोकेऽस्मिन् उपमालङ्कारस्य प्राधान्यमनुभूयते, यथा नः श्रुतिः निर्मिन्दन्निव प्रतिभयश्चेतांसि मथ्नन्निव सरित्पतेः ध्वनिरयं क्रुद्धस्य इस दूरादेव श्रूयते। अत्र समुद्रगर्जनेन साकं त्रुति निर्भिन्दन् पुनः प्रतिभयश्चेतांसि मथ्यान्निव प्रतिभाति। अपि च सरित्पतेः ध्वनिः क्रुद्धस्यैव तुलना उपमालङ्कारं बोधयति श्लोकेऽस्मिन् समुद्रगर्जनस्य ध्वनिर्भवति साधारणधर्मः तस्मादुपमा।

उपमालङ्कारप्रसेङ्गे तृतीयः श्लोकः उदाहृतः–

**अहेतुवादादिविरूक्षवाशितं.... ।**

**....पराक्रमे सति ॥**

महाबोधिजातकतः संगृहीतः। अत्रास्य श्लोकस्यार्थो भवति यद् अहेतुवादिनः परस्परं विरोधिवचनेन साकं श्गालस्य रावं तुलितम्। अत्र साधारणधर्मो भवति कर्कशता। अपि चाहेतुवादिनं परस्परविरोधिवचनं भवति उपमानम्, तथा शृगालानां रावं भवति उपमेयः। तस्मादत्रोपमा।

अपरे एकस्मिन् श्लोके, यतः विशेषतया रूरूजातकादुदाहृतः। स यथा–

**सङ्क्षेपेण दयामताः.... ।**

**....राजत्वमुद्भावय ॥**

अस्यार्थः एतादृशो भवति यथा यतः अतः संक्षेपेण दया धर्मः इति इदं बुद्धिमन्तलः जनाम् स्थिरं मतम्। सज्जनानां प्रियः क गुणः यः दयायाः पश्चात् न गच्छति। अतः यथा पुत्रोपरि स्वोपरि तथा अन्येषां जनानां कृते दयां कृत्वा सदाचरणस्य माध्यमेन जनानां मनांसि हृत्वा स्वराजत्वं प्रकाशयतु।

श्लोकेऽस्मिन् यथा पुत्रोपरि यथा स्वोपरि तथा अन्येषां जनानामुपरि इति भागे अलङ्कारः साधारणो धर्मः दयाभावः। पुत्रे तथा स्वस्मिन् उपमानभागः, अन्येषु जनेषु उपमेयभागः विद्यते।

## अतोऽत्रोपमालङ्कारः

ब्रह्मजातके उपमालङ्कारस्यैकमुदाहरणमवलोकयन्तु यथा–

**जित्वा दृप्तौ शात्रवमुख्याविव संख्ये,**
**रागद्वेषौ चितसमादानबलेन।**
**ब्राह्मं लोके येऽभिगता भूमिपतेषां,**
**दैवानामन्यतमं मां त्वमवेहि॥**

श्लोकस्यार्थः एतादृशः भवति, यथा युद्धे द्वौ अभिमानिनौ शत्रू सदृशं रागद्वेषौ चात्मसंयमस्य शक्तेः जित्वा यः व्यक्तिः ब्रह्मलोकं गच्छति भो राजन् तेषु अहमेकोऽस्मीति परिगणयनतु।

श्लोकेऽस्मिन् उपमालङ्कारस्य लक्षणं परिदर्शनमेतादृशं यद् युद्धे द्विशत्रुणा साकं रागं द्वेषं च तुलना तत्र साधारणो धर्मः जयमुपमानः रागद्वेषौ तथा उपमेय। युद्धस्याभिमानिनौ द्वौ प्रधानौ शत्रू। अतोऽत्रोपमालङ्कारः सदृशस्य भावहेतोः। अन्तिमे उदाहरणे कल्माषपिण्डिजातके प्रथमश्लोके–

गुणास्तयाधिकं रेजुर्दैवसम्पद्भिमुषयाः।
किरणा इव चन्द्रस्य शरदुन्मीलितश्रियः॥

अस्मिन् श्लोके उपमालङ्कारस्य प्रभावो दृश्यते। अर्थो भवति, यथा–

दैवी सम्पत्तियुक्त विभूषितं च तस्य सदुण: अत्यधिकं शोभितं यथा शरदतौ चन्द्रमसः शोभा अतिशयेन वर्द्धते।

अत्र देवीसम्पत्तियुक्तं भूत्वा राज्ञः सदुणानां विकसनं विद्यते तथा शरदतौं चन्द्रमसः शोभा इति अनयोः मध्ये तुलना उपमालङ्कारः साधारणो धर्मः विशेषोपमानः दैवीगुणसम्पन्नो राजा तथा उपमेयः चन्द्रमसः किरणानि। अतोऽत्रोपमालङ्कारः विराजते।

अनेन प्रतिभाति यद् आर्यशूरेण कृतायां जातकमालायां बहुषु भागेषु उपमालङ्कारस्य वर्णनं सोदाहरणं वर्णितम्। विस्तारभयाद् अन्यानि उदाहरणानि न प्रस्तूयन्ते। उपमालङ्कारस्य सविशेषत्वमतिसङ्क्षेपेण यथा–

**पूर्णा लुप्ता च।**
**पूर्णाऽपि द्विविधा**
**श्रौती आर्थी च।**

एते पुनः षड्भेदाः समासगा, तद्धितगा वाक्यगा भेदात्। लुप्ताश्च प्रथमतः अष्टधा, तेऽपि अष्टौ अष्टादशभागेन विभक्ताः।

प्रारम्भिकभागे लुप्तायाः भेदाः, यथा–धर्मलोपे, उपमानलोपे, वाचकलोपे, धमोपमानलोपे, उपमानोपमेयोः लोपे धर्मोपमानवाचकानां लोपे धर्मोपमानवाचकानां लोपे चेति। अपरेऽपि केचन साधारणालङ्कार यथा एकदेश विवर्तव्यापि उपमारसनोपमा, मालोपमा, अनन्वय उपेयोपमा आदि अलङ्काराः उपमालङ्कारस्य भेदरूपेण विद्यन्ते। तदभिन्न अपि अलङ्काराः सन्तिः तेषां जातकमालया सांक विवेचना विषयस्य संक्षेपहेतोः तेषां वर्णना मया न संयोजिताः।

परन्तु बहुसंख्यकानि अलङ्काराणि सन्ति तेषां वर्णनं न्यूनमालोचनीयं प्रतिभाति।

येऽलङ्काराः मूर्धन्यभूताः, ते सन्ति–दीपकः अपह्नुति, यमकम्, परिकरः, उत्प्रेक्षा, दृष्टान्तः, निदर्शना, प्रतिवस्तूपमा, व्यतिरेकः, स्मरणम्, परिणामः सन्देहः। भ्रान्तिमान्, उल्लेखः निश्चयः अतिशयोक्तिः, तुल्ययोगिता, सहोक्तिः, समासोक्तिः, व्याजस्तुतिः, अर्थान्तरन्यासः, आक्षेपः, विभावना, विरोधः, असङ्गतिः, विषयम्। समविचित्रम्, अधिकम्, अन्योन्यम्, विशेषः यथा–संख्यम् पर्यायपरिवृत्तिः, परिसंख्या, अर्थापत्तिः, विकल्पः, समुच्चयः, संसृष्टि, सङ्करश्चेत्यादि।

## सन्दर्भ


1. जातकमाला, आर्यशूर (मोतिलाल बनारसीदास प्रकाशन)
2. साहित्यदर्पणे, विश्वनाथः, दशमपरिच्छेदे, श्लोकक्रमाङ्कः 22
3. तत्र द्वितीयपादः।
4. साहित्यदर्पणे दशमपरिच्छेद प्रथमपादः श्लोकक्रमाङ्कः 121
5. जातकमाला, आर्यशूरः, मैत्रीबलजातकम् श्लोकक्रमाङ्कः 491
6. वही, 49
7. जातकमाला, आर्यशूरः सुपारगजातकम् श्लोकक्रमाङ्कः 22
8. जातकमाला, सुपारगजातकम्, प्रथमपादः, 22

9. वही, द्वितीयपादः, 22
10. वही, तृतीयपादः, 22
11. वही, चतुर्थपादः 22
12. विश्वनाथः साहित्यदर्पणम्, 14
13. दशमपरिच्छेद साहित्यदर्पणम् 15
14. श्लोकांशः साहित्यदर्पणस्य
15. जातकमाला, सुपारगजातके, 22
16. तत्रेव, महाबोधिजातकम्, 6
17. जातकमाला, रूरूजातकम् 44
18. वही
19. जातकमाला, आर्पभूः, ब्रह्मजातकम् 4
20. जातकमाला, कुल्माषपिण्डिजातकम् 2